॥ श्रीगणेशन्यासः ॥

श्री गणेशाय नमः ॥

आचम्य, प्राणायामं संकल्पं च कृत्वा , दक्षिणहस्ते
वक्रतुण्डाय नमः ।
वामहस्ते शूर्पकर्णाय नमः ।
ओष्ठे विघ्नेशाय नमः ।
अधरोष्ठे चिन्तामणये नमः ।
सम्पुटे गजाननाय नमः ।
दक्षिणपादे लम्बोदराय नमः ।
वामपादे एकदन्ताय नमः ।
शिरसि एकदन्ताय नमः ।
चिबुके ब्रह्मणस्पतये नमः ।
दक्षिणनासिकायां विनायकाय नमः ।
वामनासिकायां ज्येष्ठराजाय नमः ।
दक्षिणनेत्रे विकटाय नमः ।
वामनेत्रे कपिलाय नमः ।
दक्षिणकर्णे धरणीधराय नमः ।
वामकर्णे आशापूरकाय नमः ।
नाभौ महोदराय नमः ।
हृदये धूम्रकेतवे नमः ।
ललाटे मयूरेशाय नमः ।
दक्षिणबाहौ स्वानन्दवासकारकाय नमः ।
वामबाहौ सच्चित्सुखधाम्ने नमः ॥

इति मुद्गलपुराणोक्तो गणेशन्यासः समाप्त ॥